महामारिभयं तत्र तस्कराणां समन्ततः ।
नृपाश्च नृपवरा श्रेष्ठा हन्यन्ते व्याधिभिस्तदा ॥

दिशः सर्वे समन्ताद्वै दुर्भिक्षं चापि निर्दिशेत् ।
विशाखस्वातिनौ युक्तौ नक्षत्रवरपूजितौ ॥

राहोरागमनं विन्द्यात् पशूनां पीडसम्भवाम् ।
विविधा कुलमुख्यास्तु हन्यन्ते शस्त्रिभिस्तदा ॥

ज्येष्ठानुराधसंयुक्तौ नक्षत्रौ वरवर्णितौ ।
राहोरागमनं तत्र सुभिक्षं वा विनिर्दिशेत् ॥

मूलेन यदि चन्द्रस्थः राहुर्दृश्यति भूतले ।
उद्यन्तं तदा ग्रस्तं उदितं वापि सर्वतः ॥

अस्तं यातेन तेनैव शशिनो राहुणा सदा ।
प्राच्याध्यक्षो विनश्येयुः पूर्वदेशजनालया ॥

महान्तं शस्त्रसम्पातं दुर्भिक्षं चापि निर्दिशेत् ।
परचक्रभयाद् भिन्ना त्रस्ता गौडजना जना ॥

राजा वै नश्यते तत्र व्याधिना सह मूर्छितः ।
उभौ अषाढौ तदाकाले राहुर्दृश्यति मेदिनीम् ॥

तत्र दुःखं महाव्याधि तत्र दृश्यति भूतले ।
नृपमुख्यास्तदा सर्वे दुष्टचित्ता परस्परम् ॥

धनिष्ठे श्रवणे चैव निर्दिष्टं लोकनिन्दितम् ।
नाना गणमुख्या वै विश्लिष्टान्योन्यतद्भवा ॥

पूर्वभद्रपदे चैव नक्षत्रे शतभिषे तथा ।
राहुरागमनं दृश्येत सुभिक्षं चैव निर्दिशेत् ॥

उत्तरायां यदा युक्तः नक्षत्रे भद्रपदे तथा ।
राहुरागमनं श्रेष्ठं दिवा रात्रौ तु निन्दितम् ॥

रेवत्यां तु यदा चन्द्रः राहुणा ग्रस्त सर्वतः ।
उद्यन्तं तथा भानोर्निशिर्वा चन्द्रमण्डले ॥

अस्तं यातो यदा राहुर्ग्रहमुख्यैः सहोत्तमैः ।
मध्यदेशाच्च पीड्यन्ते मागधो नृपतेर्वधः ॥

एतद् गणितं ज्ञानं मानुषाणां महीतले ।
नक्षत्राणामेतत् प्रमाणं चैव कीर्तितम् ॥

अशक्यं मानुषैरन्यैः प्रमाणं ग्रहयोनितम् ।
नक्षत्रमाला विचित्रा वै भ्रमते वै नभस्तले ॥

एतन्मानुषां सङ्ख्याततोऽन्यद् देवयोनिजाम् ।
यो यस्य ग्रहमुख्यो वा क्षेत्रराशिसमोदिता ॥

नक्षत्रं कथितं पूर्वं तस्य तं कुरुतेऽन्यथा ।
ईषत् प्रमाणं न दोषोऽस्ति बहुधाचास्ति निन्दितम् ॥

एतत् प्रमाणकाले वै ग्रहमुख्योऽर्थकृत् स्मृतः ।
कालं कथितं ज्ञेयं नियमं चैव कीर्त्यते ॥

नक्षत्रराशिसंयुक्तः कम्पो निर्घात उल्किनः ।
सग्रहौ यदि तत्रस्थौ रविचन्द्रौ तु दृश्यते ॥

उभयान्तं तदा तस्य नक्षत्रां जातिभूषिताम् ।
अन्यथा निष्फलं विन्द्यात् प्रभावं वापि निन्दिते ॥

तस्माज्जपे तदा काले मन्त्रसिद्धिसमोदिता ।
धूम्रवर्णं यदाकाशं दृश्यते सर्वतः सदा ॥

तदा महद् भयं विन्द्यात् परचक्रभयेत् तदा ।
शशिने भास्करे चापि धूम्रवर्णो यदा भवेत् ॥

पर्येषा द्वित्रयो वा वा तत्र विन्द्यान्महद् भयम् ।
धूमिकायां भवेद् वृष्टिः सर्वकाले भयानके ॥

कुत्सितं सर्वतो विन्द्याद् व्याधिसमागमम् ।
ग्रीष्मे शरदे चैव धूमिका यदि जायते ॥

समन्तात् सप्तरात्रं तु तत्र विन्द्यान्महद् भयम् ।
दिवा वा यदि वा रात्रौ धूमिका यदि जायते ॥

नक्षत्रैर्ग्रहचिह्नैस्तु तिथिवारान्तरेण वा ।
पूर्ववत् कथितं सर्वं यथा निर्घात उल्किनाम् ॥

तैरेव दिवसैः पूर्वं धूमिकाया नियोजयेत् ।
अर्धरात्रेऽथ मध्याह्ने धूमिका जायते सदा ॥

तत्र विन्द्यान्महोद्वेगं नृपतीनां पुरोत्तमाम् ।
शरदे यदि हेमन्ते ग्रीष्मे प्रावृषेऽपि वा ॥

धूमिका सर्वतो ज्ञेया नक्षत्रैश्चैव कीर्त्तितः ।
शुभाशुभं तथा ज्ञेयं दिवा वा यदि वा निशा ॥

निःफलं चापि विन्द्या वै सफलां चापि कीर्त्तिताम् ।
सर्वतः भूमिकम्पे वापि तथोल्कचैकतो राहुसमागमम् ॥

तत्र धूमो भवेद् यद्यत् समन्ताश्चैव नभस्तले ।
अचिरात् तत्र तद् राज्यं घात्यते शस्त्रिभिः सदा ॥

प्रभवः सर्वतो देशे मृत्युश्चैव प्रकीर्त्यते ।
सप्ताहाद्विजयमुख्या भुवि वाता सत्त्वयोनयः ॥

घात्यन्ते सर्वतो नित्यं शस्त्रिभिर्मृत्युवशानुगा ।
अन्योन्यापरतो राज्यं कृपावर्जितचेतसः ॥

विभिन्ना शस्त्रिभिः क्षिप्रं वणिजा नृपयोनयः ।
ग्रीष्मे सितवर्णस्तु नभो यत्र प्रदृश्यते ॥

महाव्याधिभयं तत्र नीले चैव शिवोदयम् ।
पीतनिर्भासमुद्यन्तं सविता दृश्यते यदा ॥

ग्रीष्मे च कथिता मृत्युः शरत्काले च निन्दितम् ।
हेमन्ते च वसन्ते च ताम्रवर्णः प्रदृश्यते ॥

अन्यथा पीतनिर्भासौ निन्दितो लोकवर्जितः ।
शरदे ग्रीष्मतो ज्ञेयः सितिवर्णः प्रशस्यते ॥

प्रावृड्काले तथा शुभ्रे पीतो वा न च + + + ।
महाप्रभावसङ्काशं महानीलसमप्रभः ॥

नभो ज्ञेयं सदाकालं सर्वसौख्यफलप्रदम् ।
विपरीतं ततो विन्द्या देशमावासपीडनम् ॥

सस्योपघातमारिं च दुर्भिक्षं चापि मुच्यते ।
अतिकष्टं सुरा ह्येतं भयं वा रसदूषितम् ॥

महाप्रणादं घोरं च शुक्रे वै च नभस्तले ।
तत्क्षणादेव सर्वेषां नृपतीनां प्राणोपरोधिनम् ॥

ततोऽन्यच्छुभसंयुक्तं श्रेयसा चैव कल्पयेत् ।
सग्रहे भास्करे चन्द्रे यदा राहो महद्भये ॥

नश्यन्ते जनपदास्तत्र विविधा कर्मयोनिजा ।
ततोऽन्यच्छुभसंयुक्तं शब्दं लोकपूजितम् ॥

श्रेयसार्थे नियोक्तासौ सुरश्रेष्ठा ग्रहोत्तमा ।
विविधा मन्त्र सिद्ध्यन्ते विविधा मूलफलप्रदा ॥

विविधा वा न वा सर्वे विविधा प्राणसम्भवाः ।
अनेकाकारसम्पन्ना स्वरूपा विकृतास्तदा ॥

नानाप्रहरणाश्चैव नानाशस्त्रसमुद्भवा ।
सर्वमतयो ह्यग्रा मूलमन्त्रसुभूषणा ॥

सर्वे ते साध्यमाने वै सिद्धिं गच्छेयु सग्रहा ।
ग्रहे चन्द्रे यदा भानो राहुणार्थोऽपि सग्रहे ॥

तस्मि काले तदा जापी मन्त्रमावर्तयेत् सदा ।
सर्वे ते वरदाश्चैव + + + + भवन्ति ते ॥

सत्त्वोपकारं फलं ह्येतद् प्रतिष्ठा तत्र दृश्यते ।
सिध्यन्ते मन्त्रराट् क्षिप्रं ग्रहे जप्ता सराहुके ॥

सप्ताभिर्दिवसैर्मासैः पक्षैश्चापि सुपूजिताः ।
मन्त्राणां सिद्धिनिर्दिष्टा सग्रहे चन्द्रभास्करौ ॥

यामान्ते अर्धरात्रे वै सिद्धिरुक्ता तथागतैः ।
विधियुक्तास्तु वै मन्त्रा विहीनां नेष्यते ध्रुवम् ॥

ब्रह्मस्यापि महात्मानः किं पुनर्भुवि मानुषाम् ।
शक्रस्यापि च देवस्य रुद्रस्यापि त्रिशूलिने ॥

विष्णोश्चक्रगदाहस्ते तार्क्ष्यस्यापि महात्मने ।
नेष्यते सिद्धिरेतेषां विधिहीनेन कर्मणाम् ॥

मन्त्रे सुजप्ते युक्ते च तन्त्रयुक्तेन हेतुना ।
सिध्यन्ते इतरस्यापि + + + + + + + + ॥

विधिना मानुषैर्मुक्ता विद्यातत्त्वसुभूषिता ।
सिध्यन्ते सग्रहा क्षिप्ता जप्ता कालेषु योजिता ॥

ददाति फलसंयुक्तं विद्यश्च सर्वत्र योजिता ।
हेतुकर्मफला विद्या + + + हेतुदूषणी ॥

कर्म सहेतुकं विन्द्या विद्याद्धेतुफलोदया ।
विद्या कर्मफलं चैव हेतु चान्य नियोजयेत् ॥

चतुःप्रकारात्तथा विद्या चतुर्था कर्मसु योजिता ।
दद्यात् कर्मफलं क्षिप्रं सा विद्या हेतुयोजिता ॥

सा विद्या फलतो ज्ञेया बुद्धैश्चापि सुपूजिता ।
विद्या सर्वार्थसंयुक्ता प्रवरा सर्वकर्मिका ॥

प्रदद्युः कर्मतो सिद्धिं सा विद्या कर्मसु योजिता ।
श्रेयसा चैव योजयेत् न मन्त्राणां गतिगोचरम् ॥

प्रभावं मन्त्रसिद्धिं च लोकतत्त्वं निबोधताम् ।
निःफलं कर्मतो वा वा फलं कर्म च तत्र च ॥

+ + + + + + + + लोकतत्त्वनियोजिताम् ।
दृश्यते फलहेतुर्वा मन्त्रा बुद्धैश्च वर्णिता ॥

न फलं कर्म क्रमं हन्ति नाफलं कर्म क्रिया परा ।
फलं कर्मसमारम्भात् सिद्धि मन्त्रेषु जायते ॥

गुणं द्रव्यक्रमायोगा क्रमं द्रव्यक्रियाक्रमा ।
मन्त्रराड् सिद्धयते तत्र फला कर्मेषु योजिता ॥

विधिद्रव्यसमायुक्तः वृत्तस्थो कर्मयोजितः ।
न योनिः कर्मतो ज्ञेयं यो नियुक्तः सदा फले ॥

न बृहत्कर्मतां यान्ति सिद्धिमन्त्राक्षरं सदा ।
तदा मन्त्री जपेन्मन्त्रं विधियोनिसमाश्रया ॥

कालक्रमा गुणाश्चैव विधियोनिगतिसौगतः ।
सिद्ध्यन्ते मन्त्रराट् सर्वे विधिकालार्थसाधिका ॥

न गुणं द्रव्यतो ज्ञेयं नाद्रव्यं गुणमुच्यते ।
गुणद्रव्यसमायोगात् संयोगान्मन्त्रमर्चयेत् ॥

अर्चिता देवताः सर्वे आमुखेनैव योजयेत् ।
तत्प्रमाणं गुणं द्रव्यं क्षिप्रमन्त्रेषु साधयेत् ॥

क्रमः कालगुणोपेतः गुणकालक्रमक्रिया ।
चतुर्धा दृश्यते सिद्धिः मन्त्रेष्वेव सुयोजिता ॥

प्रभावं गुणविस्तारं सत्त्वनीतिसुखोदयम् ।
प्रदद्युः सर्वतो मन्त्रा गुणेष्वेव नियोजिताः ॥

प्रभवं सर्वतः कर्म गुणद्रव्यं च सिद्ध्यते ।
नापि द्रव्या गुणामेता द्रव्यकर्माच्च वर्जिता ॥

न सिद्धिं दद्यु तत्क्षिप्रं यथेष्टमनसोद्भवात् ।
मानसा मन्त्रनिर्दिष्टा न वाचा मनसा विना ॥

वान्यतो मन्त्रविज्ञेया न वान्या मनसे विना ।
नान्यकर्मा मनश्चैव संयोगात् सिद्धिरिष्यते ॥

न दृष्टिकर्मतो हीना नेष्टं कर्मविवर्जितम् ।
सम्यग् दृष्टि तथा कर्म वाक् चित्तं च योजितम् ॥

सिद्ध्यन्ते देवताः क्षिप्रं मन्त्रतन्त्राक्षरोदितम् ।
सम्यग्दृष्टिसमायोगा सम्यक् कर्मान्तयोजयोः ॥

+ + + + + + मन्त्रा सिद्ध्यन्ति सर्वदा सम्यक् ।
कर्मान्तवाक्सुमोपेतं सम्यग्दृष्टिसुयोजितम् ॥

सिद्ध्यन्ते सर्वतो मन्त्राः सम्यक् कर्मान्तयोजिताः ।
न चित्तेन विना मन्त्रं न स्मृत्या सह चित्तयोः ॥

सम्यक् स्मृत्या च चित्ते च दृश्यते मन्त्रसिद्धये ।
न स्मृत्या च विनिर्मुक्ता मन्त्र उक्तस्तथागतैः ॥

स्मृत्या समाधिभावेन सम्यक् तेन नियोजिताः ।
दृश्यन्ते ऊर्जितं मन्त्रैः सिध्यन्ते च समाधिना ॥

सम्यक्समाधिनो भावो मन्त्रा लोकसुपूजिताम् ।
तत्प्रयोगा इमा मन्त्राः समाध्या परिभाविता ॥

सिध्यन्ते मन्त्रराट् तत्र योगं चापि सुपुष्कलम् ।
सम्यक् समाधिभिर्ध्येयं मन्त्रं ध्यानादिकं परम् ॥

सिध्यन्ते योगिनो मन्त्रा नायोगात् सिद्धिमुच्यते ।
यो मया कथितं पूर्वं सम्यगुक्तसुयोजितम् ॥

नान्यथा सिद्धिमित्याहुर्मुनयः सत्ववत्सलाः ।
नासङ्कल्पाद् भवेन्मन्त्रः सम्यक् तत्त्वार्थयोजिताः ॥

सङ्कल्पा मन्त्र सिध्यन्ते सम्यक् ते विधियोजिता ।
न पूज्य मन्त्रराट् सर्वे सम्यक् सङ्कल्पवर्जिताः ॥

सिध्यन्ते सर्वतो मन्त्राः सम्यगाजीवयोजिता ।
सम्यक् सङ्कल्पतो ज्ञेयं मन्त्रेष्वेव सुखोदयम् ॥

आजीवे शुद्धितां याति मन्त्रा सम्यक् प्रयोजिता ।
सिध्यन्ते भुवि निर्दिष्टा मन्त्रमुख्या सुयोजिता ॥

आजीवं हि फलं युक्तो सम्यगेव सुयोजयेत् ।
सम्यक् सञ्जीवरतो मन्त्री शुद्धचित्तः सदा शुचौ ॥

शुचिनः शुचिकर्मस्य शुचिकर्मान्तचारिणः ।
सिध्यन्ते शुचिनो मन्त्रा कश्मलाकश्मले सदा ॥

क्रव्यादा येतरा मन्त्रा ये चान्ये परिकीर्तिता ।
सिध्यन्ते मन्त्रिणां मन्त्राः क्रव्यादेष्वेव भाषिताः ॥

रुद्रविष्णुर्ग्रहा चोरै गरुडैश्चापि महर्द्धिकैः ।
यक्षराक्षसगीतास्तु सिध्यन्ते मन्त्रकश्मलाः ॥

विविधैर्भूतगणैश्चापि पिशाचैर्मन्त्रभाषिताः ।
स्वयं न सिध्यते विधिना हीना अशौचाचाररतेष्वपि ॥

विधिना योजिता क्षिप्रं अशौचेष्वेव सिद्धिदा ।
तस्मान्मन्त्रं न कुर्वीत विधिहीनं तु कर्मयोः ॥

सिध्यन्ते साश्रवा मन्त्रा विधिकर्मसुयोजिताः ।
साध्यास्तु तथा मन्त्रा आर्या बुद्धैस्तु भाषिता ॥

तेषां सिद्धि विनिर्दिष्टा मार्गेष्वेत्र सुयोजिता ।
आर्याष्टाङ्गिकं मार्ग चतुःसत्यसुयोजितम् ॥

चतुर्ध्यान सदाचेयं चत्वारश्चरणाश्रिताः ।
भिद्यन्ते मन्त्रमुख्यास्तु प्रवरा बुद्धापदेशिता ॥

अनाख्येयस्वभावं वै गगनाभावस्वभावताम् ।
मन्त्राणां विधिनिर्दिष्टां आर्याणां च महौजसाम् ॥

भूम्यानां विधिनिर्दिष्टा सिद्धिमार्गविवर्जितम् ।
विद्यानां कथयिष्येऽहं तन्निबोध्य दिवौकसाः ॥

दशकर्मपथे मार्गे कुशले चैव सुभाषिते ।
सिध्यन्ते दिव्यमन्त्रास्तु विधिदृष्टेन कर्मणा ॥ इति ।

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्रादार्यमञ्जुश्रीमूलकल्पा-
देकुनविंशतिपटलविसरात् पञ्चमः
ग्रहोत्पादनियमनिमित्तमन्त्रक्रिया-
निर्देशपरिवर्तपटलविसरः
परिसमाप्त इति ॥

---

## अथ द्वाविंशः पटलविसरः।

अथ भगवांश्छाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म। अस्ति मञ्जुश्रीः! त्वदीये मूलकल्पपटलविसरे सर्वभूतरुतनिमित्तज्ञानपरिवर्त्तनिर्देशं नाम। तं भाषिष्येऽहम्। यं ज्ञात्वा सर्वमन्त्रचर्यानियोगयुक्ताः सर्वसत्त्वा सर्वमन्त्राणां कालाकालं ज्ञास्यन्ते। तं शृणु। साधु च सुष्ठु च मनसि कुरु। भाषिष्येऽहम्॥

अथ मञ्जुश्रीः कुमारभूतो उत्थायासनादेकांशमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवतः शाक्यमुनेः सिंहासनं तेनाञ्जलिमुपनाम्य त्रिरपि प्रदक्षिणीकृत्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तमेतदवोचत्। तत् साधु भगवां निर्दिशतु। तं भूतरुतज्ञाननिर्देशं सर्वसत्त्वानामर्थाय। तद् भविष्यति सर्वमन्त्रचर्यानुभविष्टानां सर्वकालनियमोपकरणं सिद्धिनिमित्तये। यस्येदानीं भगवां कालं मन्यसे॥

अथ खलु भगवां शाक्यमुनिः मञ्जुश्रियस्य कुमारभूतस्य साधुकारमदात्। साधु साधु मञ्जुश्रीः! यस्त्वं तथागतमेतमर्थं परिप्रश्नितव्यं मन्यसे। तेन हि मञ्जुश्रीः! शृणुष्व निर्देक्ष्यामि॥

एवमुक्ते मञ्जुश्रीर्भगवतश्चरणयोर्निपत्योत्थाय निषण्णोऽभूद् धर्मश्रवणाय॥

अथ भगवां सर्वावतीं पर्षदमवलोक्य सर्वभूतरुतप्रचोदनी नाम समाधिं समापद्यते स्म। समनन्तरसमापन्नस्य भगवतः ये केचित् सत्त्वानन्तापर्यन्तेषु लोकधातुषु स्थिता सर्वे ते बुद्धरश्म्यावभासिता सर्वाश्च तां बुद्धां भगवतां शिरसा प्रणम्य अनन्तापर्यन्तलोकधातुस्थितां अभ्यर्चयेन भगवतः शाक्यमुनेः शुद्धावासभवनोपरिस्थितं सिंहासनं तेनोपजग्मुः। येन च सहा लोकधातुः तेन च प्रत्यष्ठात्। तत्र च स्थिता सर्वभूतगणा बुद्धानुभावेन स्वकं स्वकं रुतं विदर्शयन्तः भगवतः पादमूलसमीपोपगता धर्मश्रवणाय। भगवन्तं प्रणम्य मभ्यर्च्य च यथास्थानेषु च सन्निषण्णा अभूवं धर्मश्रवणाय॥

अथ भगवांश्छाक्यमुनिः शाक्यसिंहो शाक्यराजाधितनयः तेषां सर्वसत्त्वानां धार्म्या कथाया सन्दर्शयति समुत्तेजयति सम्प्रहर्षयति तेषां सर्वभूतसुरेश्वराणां तथा तथा धर्मदेशना कृतवां यथा तैः सर्वैः कैश्चिदनुत्तरायां सम्यक्सम्बोधौचित्यान्युत्पादितानि । कैश्चित् प्रत्येकायां वोको कैश्चिच्छ्रावकत्वे कैश्चित्कैश्चित् सत्यानि दृष्टानि कैश्चिदर्हत्वं साक्षात्कृतं कैश्चिद् दशकुशले कर्मपथे स्थित्वा प्रणिधानं कृतम् । अनन्तां बुद्धां भगवतः अनन्तां कल्पकोटीष्वजोपस्थानग्लानप्रत्ययभैषज्यप्रदानं चीवरपिण्डपातशयनासनपरिष्कारं प्रदद्याप इति नियता च भविष्यामो बुद्धबोधेरिति ॥

अथ भगवां शाक्यमुनिः तेषां सत्त्वानामाशयं ज्ञात्वा मन्त्रं भाषते स्म सर्वभूतरुताभिज्ञा नाम । यं साधयित्वा सर्वबोधिसत्त्वाः सर्वसत्त्वाश्च रुतं विजानेयुः एकक्षणेन सर्वेषां सर्वसत्त्वानां यथागोचरमस्थितानाम् । कतमं च तत् ॥

नमः समन्तबुद्धानामप्रतिहतशासनानां समन्तापर्यन्तावस्थितानां महाकारुणिकानाम् । ॐ नमः सर्वविदे स्वाहा ॥

कल्पमस्य भवति । आदौ तावन्महारण्यं गत्वा क्षीरयावकाहारः मूलफलशाकाहारो वा अक्षरलक्षं जपेत् । त्रिःकालस्नायिना वल्कलवाससा पूर्ववत् सर्वं विधिना कर्तव्यम् । यथा मन्त्रतन्त्रेषु तथागतकुलोद्भवेषु । ततः पूर्वसेवां कृत्वा अक्षरलक्षस्यान्ते तत्रैव साधनमारभेत् । विनापि पटेन । अग्निकुण्डं कृत्वा द्विहस्तप्रमाणं चतुर्हस्तविस्तीर्णं समन्ताच्चतुरश्रं सर्वपुष्पफलैरर्घ्यं दत्वा प्राङ्मुखः कुशविण्डकोपविष्टः नवमग्निमुत्पाद्य क्षीरवृक्षकाष्ठैरग्निं प्रज्वाल्य श्रीफलफलानां दधिमधुघृताक्तानामष्टसहस्रं जुहुयात् । त्रिसन्ध्यं दिवसान्येकविंशति ॥

ततो पूर्वायां दिशि महावभासं कृत्वा बुद्धो भगवानागच्छति । ततो साधके मूर्ध्नि परामृशति । अपरामृष्टे साधके तत्क्षणादेव भगवतो वाचा निश्चरते—'सिद्धस्त्वं गच्छ यथेष्टम्, इति कृत्वान्तर्धीयते ॥

ततःप्रभृति साधकः पञ्चाभिज्ञो भवति महाप्रभावदिव्यमूर्त्तिः बोधिसत्त्वाचारः द्विरष्टवर्षाकृतिः यथेष्टगतिः सर्वभूतरुतज्ञः, एकक्षणमात्रेण सर्वभूतानां रुतं विजानीते प्रभवश्च भवति यथेष्टगामी । पञ्चवर्षसहस्राणि जीवते । अवैवर्त्तिको भवति बोधिसत्त्वः । विंशतिभिः साधनप्रवेशैर्नियतं सिध्यतीति नात्र विचिकित्सा कार्या प्रसाधितस्यापि न मन्त्रं जपता पूर्वमादितश्चैव मध्ये चैव निबोधताम् ॥

रुतज्ञानं प्रभावं च स्वभावं चैव कीर्त्यते ।
मध्ये आदितश्चैव अन्ते चैव दिवौकसाम् ॥

भाषितं कथ्यते लोके मध्यदेशे च कीर्तिता ।
मागधा मङ्गदेशेषु काशिपुर्या नरोत्तमा ॥

वृजिकोसलमध्येषु नरेष्वेव यथावच ।
तथा ते देवराट् सर्वे मन्त्रां वत्रे स्वभावतः ॥

त्रिदशो मध्यदेशे च वत्स पश्य दशार्णवा ।
अमन्ते यथा वाचा तथा देशेषु जायते ॥

त्रिदशेष्वेव सर्वत्र तथा वाणीमुदाहृता ।
यामा देवमुख्याश्च निर्माणश्च सनिर्मिता ॥

तदा वाचकृतां वाचा मध्यदेशार्थचारिणी ।
तथारूपिण सर्वे वै अकनिष्ठाश्च महर्द्धिका ॥

सर्वे ते सुरः श्रेष्ठा रूपधातुसमाश्रृता ।
ध्यानाहारगता सौम्या कदाचिद्वाचामभाषिरे ॥

ब्राह्मीश्वरमतेला च कलविङ्करुतस्वना ।
मधुराक्षरनिर्घोषा मत्तकोकिलनिःस्वना ॥

यद्यदार्त्था भवेद् वाचा धीरगम्भीरसंयुता ।
तथा सर्वतो वक्रा दृष्ट्या चैव सुपूजिता ॥

भवन्ते ते सदा देवा मध्यदेशे सवाचका ।
मधुराक्षरसम्पन्नाः स्निग्धगम्भीरनादिनः ॥

मेघगर्जना तेषां वाचैषा तां तु लक्षयेत् ।
मध्यदेशा यथा मर्त्या अवन्त्येष्वेव पूजिता ॥

वाचा शब्दसम्पन्ना तथा ज्ञेयां सुरेश्वराम् ।
अरूपिणां कुतो वाचा असंज्ञायतनसम्भवाम् ॥

अभावादाश्रयात् तेषां न वाचां जग्मिरे सुराः ।
अधः श्रेष्ठाः सुराः सर्वे मध्यदेशेषु वाचका ॥

मध्यदेशात्र्थचिह्वानां वाचैषा सम्प्रवर्तते ।
अथ देवामथ भूम्या वै यक्षाश्चैव महर्द्धिकाः ॥

देवयोनिसमाविष्टा बहुसत्त्वगणास्तथा ।
करोटपाणयो देवा सदा मत्ताश्च वीणकाः ॥

चत्वारोऽपि महाराजा चतुर्योनिसमाश्रिता ।
त्रिदशा देवमुख्यास्तु शक्रेण सह समाश्रिता ॥

सुयामामथ सर्वत्र ऊर्ध्वे जापि सुरूपिणः ।
सर्वदेवगणा श्रेष्ठा वाचा ह्येषा तु कीर्त्यते ॥

मध्यदेशे यथा मर्त्या हीनोत्कृष्टमध्यमाम् ।
तथा देववती वाचा हीनोत्कृष्टमध्यमाम् ॥

वाचा तृविधा ज्ञेया हीनोत्कृष्टमध्यमा ।
त्रिविधात् कर्मतो ज्ञेया हीनोत्कृष्टमध्यमा ॥

तथा देवालये वाणी मधुरं चापि सूक्तजिता ।
रुतं मतं तथा ज्ञेयं कर्मेष्वेव नियोजयेत् ॥

असुराणां भवेद् वाचा गौडपौण्ड्रोद्भवा सदा ।
यथा गौडजनश्रेष्ठं रुतं शब्दविभूषितम् ॥

तथा दैत्यगणा श्रेष्ठं रुतं चापि नियोजयेत् ।
तेषां पर्यटन्तानां समन्तानां च पुरोजवाम् ॥

यक्षराक्षसप्रेतानां नागांश्चापि सपूतनाम् ।
सर्वेषामसुरपक्षाणा वङ्गसामतटाश्रयात् ॥

हरिकेले कलशमुख्ये च चर्मरङ्गे ह्यशेषतः।
सर्वेषां जनपदां वा तथा तेषां तु कल्पयेत् ॥

त्रिप्रकारा यथोद्दिष्टा तेषां नैव वियोजयेत्।
देवानां च तथा नित्यं पुरोगानां परिकीर्तयेत् ॥

प्रेतयक्षगणाध्यक्षा स्कन्दमातरकिन्नरा।
नागांश्चैव सदा काले यथा वाचा निबोधताम् ॥

लाडोद्रेषु तथा सिन्धौ यथा ग्रुत्तरतो तथा।
जनेष्वेव हि सर्वत्र तां तु तेषां नियोजयेत् ॥

नागानां च यथा लाडी वाचा ह्युक्ता मनीषिणी।
यक्षाणां तु तथा वाचा उत्तरां दिशि ये नराः ॥

गरुडानां यथा ह्येद्रे किन्नराणां तु कीर्त्यते।
नेपाले सर्वतो वाचा यथा सा तां निबोधताम् ॥

पूतनानां तथा नार्या विन्ध्यकुक्षिनिवासिनाम्।
विन्ध्यजाता मनुष्याणां म्लेच्छानां च या वाचा ॥

पूतनानां तु सा ज्ञेया वाचैषां परिकीर्तिता।
राक्षसानां यथा वाचा तां वक्ष्ये सुरोत्तमा ॥

सस्र्ज्यदक्षिणा देशा अन्ध्रलाटेषु कीर्तिता।
द्रविडानां तु सर्वेषां डकारबहुला सदा ॥

तां तु वाचा समालक्ष्ये राक्षसेष्वेव नियोजयेत्।
त्रिःप्रकारा तथा ज्ञेया राक्षसानां कुलयोनयः ॥

त्रिःप्रकारैव वाचैषा त्रिधा चैव नियोजयेत्।
सर्वतो त्रिविधा ज्ञेया देशभाषाश्च ते त्रिधा ॥

त्रिःप्रकारं तथा कर्म त्रिदेशं चैव योजयेत्।
त्रिविधः सर्वतो ज्ञेयः त्रिविधं कर्म रुतं स्मृतम् ॥

समं सर्वैषु तत्रैव विधातान्यं नियोजयेत्।
नानाभूतगणा प्रोक्ता नानाभूतलवासिनः ॥

नाना च बहुभाषज्ञा नानाशास्त्रविभूषिता ।
मानुषा मानुषां विन्द्या नानावाचविभाषिताम् ॥
नानाशास्त्रमता ज्ञेया नानामन्त्रार्थशालिनः ।
नानाकर्मसमोद्देशा नानासिद्धिस्तु मुच्यते ॥
आविष्टानां यदा मर्त्या पात्रंस्थानसमागता ।
तेषां च विधियुक्तेन मन्त्रैश्चापि सुयोजिता ॥
आगता भूतले देवां वाचेनैव विभावयेत् ।
लिङ्गमर्थं तथा पात्रं देवं चैव नियोजयेत् ॥
श्रेयसा श्रेयसे चैव आवेशांनां तु लक्षयेत् ।
नानादेशसमाचारा नानाभाषसमोदया ॥
नानाकर्मार्थसंयोगा नानालिङ्गैस्तु लक्षयेत् ।
मध्यदेशाबहिर्येषां वाचा भवति चञ्चला ॥
ते तु व्यक्तं नरा ज्ञेया म्लेच्छभाषारता हि ते ।
ये क्रूरा राक्षसा घोरा रौद्रकर्मान्तचारिणः ॥
डकारबहुला वाचा लकाराव्यक्त मार्षो ।
दाक्षिणात्या यथा वाचा चञ्चला भवति निन्दिता ॥
तथा च राक्षसस्त्वेषु वाचैषा परिकीर्त्तिता ।
बहुधा रुतया ज्येष्ठा आविष्टानां तु त्रिजापराम् ॥
आकृष्टा मन्त्रिभिः क्षिप्रं स्वयं वा इह मागता ।
बहुधा गृह्णन्ति सत्त्वानां मातरा सग्रहा सुरा ॥
गरुडा यक्षगन्धर्वा किन्नरा + + + + + ।
पिशाचा चोरगराक्षसानां यक्षपूतनाम् ॥
आविष्टानां तथा लिङ्गा कथ्यमाना निबोधताम् ।
म्लेच्छभाषिण क्रव्यादा पिशाचाव्यक्तलापिनाम् ॥
लकारबहुला वाचा डकारान्तास्तु पूतना ।
तेषां नेध्वंगता दृष्टि कर्मेष्वेतेषु योजिता ॥

मात्सर्या क्रूरसत्त्वानां मृषावादाद्सुचे रता।
तेषा नोर्ध्वं गता दृष्टि अधो दृक् नोर्ध्वगता हि ते॥

मातराणां तथा वाचा शुभार्थोपसंहिता।
ग्रहाणां कुमारमुख्यानां वाचा भवति केवला॥

शुभाङ्गसम्पदा वाचा बालभाव्यर्थयोजिता।
प्रभावसर्वतः श्रेयां सर्वतश्च दिवौकसाम्॥

गरुडानां तथा वाचा आविष्टानां तु लक्षयेत्।
गकारसमता ज्ञेया म्लेच्छभाषेव लक्ष्यते॥

अव्यक्तं स्फुटाभासं कीर्तियुक्तं शुभोदयम्।
सुपर्णिने पायवदित्येषा विषदर्पनिवारणी॥

नानागतयो ह्येषां नानाभूतसमागमाम्।
नानावर्णतो ज्ञेयां नानालिङ्गैस्तु लक्षयेत्॥

शुभाकरमभाकर मभासन्तं भक्षतो नागराट् पदे।
वासुकीप्रभृतयो नागा धार्मिका वसुंधातले॥

क्षिप्रवाचा समायुक्ताश्च वसन्तो उरगाधिपा।
स्वेन स्वेन तु कायेन यो लिङ्गेन तु लक्षयेत्॥

तेन तेन तु लिङ्गेन तं तं सत्त्वं विनिर्दिशेत्।
कश्मला कथिता सर्वे अधो दृष्टिगता हि ते॥

नानालिङ्गिनां ज्ञेया नानासत्त्वनिकायताम्।
नानाकायगतैः कर्मैः नानाकायं निबोधताम्॥

एवम्प्रकाराह्यनेका बहुलिङ्गाभिभाषिणा।
नानाबुद्धिकृतैः कर्मैः नानायोनिसमाश्रितैः॥

आविष्टानां भुवि मर्त्यानां कथिता लिङ्गानि वै सदा।
सुराणामसुराणां च यथा वाचार्थलिङ्गिनी॥
तथैव तद् योजयेत् क्षिप्रं भूमिर्मानुषतां गताः।
देवानां तदा विन्द्यात् सुप्रसन्नेन चेतसा॥

निरीक्षन्ते तथा चोर्ध्वं दिशां चैव समन्ततः ।
अविक्लबा मनसौद्विल्या हृष्टा रूपसमन्विता ॥

शुद्धाक्षा अनिमिषाक्षाश्च स्निग्धा च स्निग्धवक्त्रयः ।
प्रसन्नग्लत्या तथा सर्वे सुरश्रेष्ठा नु लक्षयेत् ॥

पर्यङ्कोपहिता ज्ञेया निषण्णा भूतले शुचौ ।
केचिदम्बरं निःसृत्य निषण्णा खेचरा परे ॥

ब्रह्माद्या कथिता देवा ध्यानप्रीतिसमाहिताः ।
तदूर्ध्वं श्रेयसां स्थाने रूपिणा बहुरूपिणा ॥

आकृष्टा मन्त्रिभिर्मन्त्रैःत्यैः मन्त्रजानां सनिश्रिता ।
तेषां रूपधरा कान्तिः आश्रयां ते परिवर्तये ॥

ध्यानप्रीतिसमापन्नाः ईषिस्मितमुखा सदा ।
शुद्धाक्षा विशालाक्षा बुहुरूपसमाश्रिता ॥

वमन्त्यो तदा कान्त्या श्रिया रूपसमन्विता ।
परज्ञानाविदो देवा तेषां तं निबोधयेत् ॥

पर्यङ्कोपरिविष्टा वै ध्यायन्ता ऋषिवत् सदा ।
तदावेशं विदुर्बुद्ध्या इष्टमर्थप्रसाधकम् ॥

श्रेयसा सर्वमन्त्राणां हितायैवोपयोजयेत् ।
कथितं सर्वमेवं तु निबोधत सुरेश्वराः ॥

ऋषिणा कथिता ह्येते संयता ते ऋषवस्थिता ।
आविष्टानां तदा लिङ्गा ऋषीणां कथिता मया ॥

ऊर्ध्वदृष्टिगता देवा ऊर्ध्वपादाथ कश्मला ।
विकृता रौद्ररूपाश्च ऊर्ध्वकेशास्तु राक्षसाः ॥

मातराणां तदेवं तु केषां चैव तु दृश्यते ।
क्रव्यादा नग्नका तिष्ठे सचेला निश्चेलतां गता ॥

ऊर्ध्वपादा विकृताख्या ऊर्ध्वकेशा ग्रहा परे ।
विचेरुर्मेदिनीं कृत्स्नां समन्तात् सरितातटाम् ॥

एकवृक्षा श्मशानां च एकलिङ्गा पुलिनोद्भवाम् ।
देवावसथरथ्यासु विन्ध्यकुक्षिशिलोच्चयाम् ॥

हिमाद्रे सानुमांश्चैव म्लेच्छतस्करमन्दिराम् ।
तत्रस्था विकृतरूपास्तु मन्त्राकृष्टाश्च मागता ॥

गृह्णन्ति प्राणिनां क्षिप्रं शौचाचारपराङ्मुखाम् ।
सर्वमेदिनीं गच्छेद् भयादाहारमोहिताम् ॥

गृह्णन्ति बहुधा लोके बहुव्याधिसमाश्रिताम् ।
नानाविकृतरूपास्ते नानावेषधरा परा ॥

गृह्णन्ति प्राणिनां क्षिप्रं मृतकं सूत्रसूतकाम् ।
तेषां च कथितं लिङ्गं चेरितं तु विभावितम् ॥

नाचमालक्षितं पूर्वं कथितं तु महीतले ।
आविष्टानां तथा चिह्नं मानुषेष्वेव लक्षितम् ॥

स्थिरप्रकाराः सर्वत्र सुरश्रेष्ठा निबोधता ।
आविष्टानां तथा लिङ्गा कथिता भूतले नृणाम् ॥

स्निग्धं प्रेक्षते नित्यं अनिमिषश्चापि दृष्टितः ।
मानुषे सत्त्वसङ्क्लिष्टे सुरश्रेष्ठे तु महीतले ॥

वक्त्रे वसुधरां वाचां शब्दसङ्घार्थभूषिताम् ।
युक्ते श्रेयसे धर्मे मानुष्ये वाश्रयोगतो ॥

सुरश्रेष्ठो गतो मुख्यो ज्ञेयो सर्वार्थसाधको ।
चिन्तितं जापिने तेन गतबुद्धिदिवालये ॥

तत् सर्वं बोधयेत् क्षिप्रं मन्त्रिणे चिन्तितं तु यत् ।
एतत् सम्यगाख्यातमावेशं भुवि दैवतम् ॥

असंज्ञिनोऽपि सदा मन्त्रैराकृष्यन्ते तु भूतले ।
नभाष मधुरं वाचं न यज्ञो सत्वरा सुराः ॥

निःश्रेष्ठा विवशा चैव स्थिता ते मौनमाश्रिताः ।
न वाचा किञ्चनस्तेषां न चित्ता नापि मानिता ॥

तस्मात् तं न चाकृष्ये तं जापी परिवर्तयेत् ।
असाध्यं नापि तत्तेषां मन्त्राणां जिनसौद्भवाम् ॥

नाकृष्यं विद्यते किञ्चिद् दुष्करं तेषां जप्तमन्त्रार्थतापिनाम् ।
आकृष्यन्ते तथा आर्या आर्यैर्मन्त्रैस्तु युक्तिताः ॥

आर्याणां यानि चिह्नानि खड्गिश्रावकसम्भवाम् ।
बोधिसत्त्वा महात्मानो दशभूमिसमाश्रिता ॥

आकृष्यन्ते तथा मन्त्रैः समयैश्चापि सुभूषिताः ।
महादूत्यैस्तथोष्णीषैर्मुनिर्वर्णसुयोजितैः ॥

बुद्धपुत्रैस्तु धीमद्भिरब्जकेतुकुलोदितैः ।
कुलिशाह्वैर्मन्त्रमुख्यैस्तु क्रोधराजमैहर्द्धिकैः ॥

नान्ये मन्त्रराट् शक्ता लौकिका ये महर्द्धिका ।
नापि समयवित्तेषां न चोत्कृष्टो मन्त्रमीश्वरः ॥

वर्णितुं गणयितुं गन्तुं तं स्थानं यत्र ते सदा ।
समया सञ्चाल्यने तेषां हेतुः कर्मसमाहिताम् ॥

ननु चाकृष्यते तेषां हेतुः कर्मसमाहितम् ।
तन्त्रं चाकृष्यते तेषां समये बुद्धभाषितैः ॥

तस्मात् तं न चालये यत्ना न वृथामर्थेन योजयेत् ।
महर्द्धिका ते महात्मानो दशभूमिसमाश्रिताम् ॥

अशक्ता सर्वमन्त्रा वै गन्तुं यत्र ते तदा ।
तथागतानां तथा माज्ञा संस्मृत्यामरपूजिता ॥

आगच्छेयु तदा सर्वे मन्त्रजप्तार्थमन्त्रवित् ।
आकृष्टानां भवेल्लिङ्गा मानुष्योकायमानुषाम् ॥

धीरतः स्निग्धवर्णश्च गम्भीरार्थसुदेशकः ।
धीरो गम्भीरतां यातो अल्पवाष्पो भवेत् तदा ॥

अखिन्नमनसोत्कृष्टो पृष्टश्च मन्त्रवित् ।
स्वमुद्रो बन्धयामास सुविदिशे चैव नभस्तले ॥

परसत्त्वविदो ह्यग्रो धर्मतत्त्वार्थदेशकः ।
नीतिः प्रीतिसुखाविष्टो कृपाविष्टस्य चेतसा ॥
महोत्साहो दृढारम्भो बुद्धधर्मार्थदेशकः ।
मुहूर्त्तं क्षणमात्रं वा प्रविशेन्मानुषाश्रयम् ॥
बहुरूपो सुरूपश्च ऊर्ध्वं तिष्ठे नभस्तलम् ।
बुद्धधर्मगता दृष्टिः संघे चैव सगौरवा ॥
क्षणमात्रं तदा तिष्ठेन्मानुषीं तनुमाश्रृता ।
सत्यसन्धो महात्मानो जितक्रोधो त्रिदोषहा ॥
प्रथमं तावतो विन्द्या पश्चाच्चैव नियोजिता ।
मानुषैस्तदा कृष्टा पुनर्मुक्ताश्च यथेष्टगाः ॥
स्तब्धो निश्चलाक्षश्च सितवर्णस्तथैव च ।
अङ्गकेतुस्तदाविष्टो धीरगम्भीरसुस्वरः ॥
सुप्रसन्नो महाकायो तिष्ठते च महीतले ।
पर्यङ्कमासनाविष्टो कृपाविष्टोऽथ चेतसा ॥
स मुद्रा पञ्चरोपेतो महासत्त्वो समाविशे ।
अवलोकितो मुनिः श्रेष्ठो बोधिसत्त्वो महर्द्धिको ॥
स्वेच्छया आगतो लोकां सत्त्ववत्सलकारणो ।
अभयाग्रा कारणो + + + + + + + + + ॥
अभयाग्रा करोपेतौ ऊर्ध्वदृष्टिसमास्थितौ ।
साधकं पश्यते दृष्ट्या करुणाविष्टचेतसा ॥
ईषिस्मितमुखा देवा केचिद् भ्रूलतभूषितो ।
महासत्त्वो महात्मानो सत्त्वानां हितकारकः ॥
प्रसन्ना सर्वत मूर्त्त्या तं विन्द्यादवलोकितुम् ।
क्रूरः वज्रधरो मुख्यो बोधिसत्त्वो महर्द्धिकः ॥
आविष्टो क्रूरिणो सर्वो रक्तान्तायतलोचना ।
इन्दीवरत्विषाकार ईषत् काये तु लक्षयेत् ॥
परामृश्यन्तं तदा वज्रं मुद्रां बध्नाति मात्मनाम् ।
तुष्टो वरदो मर्त्यां भोगां दापयते सदा ॥

महात्मा कृष्णवर्णो वै ईषि दृश्यति तत्क्षणात् ।
स्निग्धं गम्भीरमुक्तोऽसौ वाचां भाषते तदा ॥
नृणां किमर्थमेतं वो कर्मवरं दास्याम वो भुवे ।
अमोघं दर्शनमित्याहुर्वज्रिणेऽब्जिजिने जिने ॥
वरदा सप्रभा मन्त्रा फलं दद्युस्तदा तदा ।
जिनेरागमनं तत्र निर्माणो भुवि मानुषाम् ॥
समयात् कथिता ह्येते वर्णाश्चैव विबोधिता ।
तथागतादाश्रयाद्धि वा फलहेतुसमुद्भवा ॥
निर्माणा कथ्यते बिम्बं न बिम्बं निर्माणमाश्रृतम् ।
बिम्बनिर्माणयो यद्वत् प्रतिबिम्ब न विद्यते ॥
पद्मकिञ्जल्कवर्णोऽसौ हेमवर्ण महाद्युतिः ।
निर्भिन्नरोचनाभासो कुङ्कुमाराभिविद्विषः ॥
उद्यन्तमिवार्कं वै कर्णिकारसमप्रभः ।
तादृशं विद्यते बिम्बे बुद्धबिम्बसमास्थते ॥
ब्राह्मश्च रनिघोषो कलविङ्करुतध्वनिः ।
श्रेयसः सर्वभूतानां युक्तियोगान्नियुज्यते ॥
तादृशं लक्षणं दृष्ट्वा बुद्धमित्याहु जन्तवः ।
तद्गोत्रा च विधिस्त्वेषां वज्राब्जकुलयो तदा ॥
लौकिकानां तु मन्त्राणां मन्त्रनाथं तु योजयेत् ।
यत् पूर्वं कथितं सर्वं बहुप्रस्तावभूषितम् ॥
तं नियुञ्ज्य तदा मन्त्री मन्त्रेष्वेव च सर्वतः ।
ऋषीणामेकसंस्थानं गरुडानां च निबोधितम् ॥
स्वलिङ्गा वाचया चैव तं नियुञ्ज्यथ मन्त्रिणाम् ।
बहुलिङ्गा तदा चैषा स्वलिङ्गा चैव साधये ॥
स्वमुद्रामुद्रिता ह्येते इतरा व्यन्तरा स्मृताः ।
कथितं सर्वमावेशं स्वमुखं दुःखदं पराम् ॥

एष कालक्रमो योगे आवेशे चैव योजयेत् ।
महाप्रभावैर्मुद्रैस्तु मन्त्रैश्चापि निवारयेत् ॥
नियुञ्ज्यात् सर्वतो मन्त्री जप्तमात्रां च चेतराम् ।
अन्यथाप्राचरेद् यस्तु इतरैर्मन्त्रिभिः सदा ॥
परिरक्ष्य तदा पात्रं मन्त्रैश्चापि महर्द्धिकैः ।
दूतिदूतगणैश्चापि चेटचेटिगणैः सदा ॥
इतरां लौकिकां देवां आह्वये चैव महर्द्धिकाम् ।
यक्षराड् विविधा सर्वां यक्षिण्यश्च महर्द्धिकम् ॥
आह्वयेत् तत्क्षणान्मन्त्री मनसः यद्यपीप्सितम् ।
अन्यमन्त्रा न चाह्वेया नान्ये देवगणा सदा ॥
स्वयमेवागता ये तु समये तां नियोजयेत् ।
सर्वे सम्पदका ह्येते मन्त्रा सर्वार्थसाधकाः ॥
तं तस्मा नेतरां कर्मं आवेशां चापि वर्जयेत् ।
आकृष्टा महर्द्धिका देवा दिव्या आर्याश्च भूमिजा ।
अल्पकार्येऽथ युञ्जाना समयभ्रंशोऽथ जायते ॥
तक्षकः प्रेक्षते स्तब्धं वासुकिश्चापि नृत्यते ।
कर्कोटकश्च महानागो मुचिलिन्दयशस्विनः ॥
शङ्खपालदुर्लक्षो नृत्यन्ते उरगाधिपा ।
शङ्खपालोऽथ शङ्खश्च मणिनागोऽथ कुण्डिलः ॥
सागरा भ्रमते क्षिप्रं पतते च मुहुर्मुहुः ।
सर्पवन्निःश्वसन्ते ते विषदर्पसमुच्छ्रिताः ॥
विविधा नागवरे ह्येते अन्तान्ता तेषु निबोधताम् ।
केचिद् भावयतो हृष्टो केचित् तिष्ठन्ति निश्चलम् ॥
केचित् पते + + क्षिप्रं स्वस्थाङ्गा ऊर्ध्वमूर्द्धजा ।
पतन्ति विविधाकारं स्तुतं चापि करोति वै ॥
अनन्ता भ्रमते क्षिप्रं पद्मवचले जले ।
अनन्ता नागयोन्यास्तु सङ्ख्याता लिङ्गवेषयो ॥

पूर्ववत् कथिता वाचा दष्टाविष्टमहोदितम् ।
मोचयेत् कुलिशाह्वेन मन्त्रेण क्रोधराजेन युक्तिमांश्च ॥
मन्त्रेणैव कुर्यान्तं तेषां मन्त्रेण योजयेत् ।
मन्त्रास्तु पर्णिना येऽत्र निर्दिष्टा विषनाशका ॥
ते तु मन्त्रा सदा योज्या दष्टाविष्टेषु सर्वतः ।
शेषा विघ्ना तथा कुर्या ग्रहमातरयोजिता ॥
तेनैव कारयेत् कर्म ग्रहमातरपूतनाम् ।
असङ्ख्या लक्षणा ह्येते दष्टाविष्टेषु जन्तुषु ॥
तैरेव लौकिकैर्मन्त्रैस्तत्तत् कर्म नियोजयेत् ।
अशेषं कथितं ह्येतं दष्टाविष्टं च लक्षणम् ॥
अधुना बोधयिष्यामि तिर्यग्भाषां समानुषाम् ।
नारकानां तु भाषां वा कथ्यमानां निबोधताम् ॥
यदा पक्षिगणा सर्वे सन्निपत्य समन्ततः ।
ग्रामवासं तदा चक्रुः मध्याह्ने जनमालये ॥
तदा ते कथये वाचां रेफंयुक्तां सभैरवाम् ।
क्रकः ककारमित्याहुः काका ये क्रूरभाषिणो ॥
कथयन्ति भयं तत्र क्षुधा चैव च दर्शयेत् ।
मयूरा कोकिलाश्चैव सन्निपत्य प्रगे तदा ॥
क्रूरां दर्शयेद् वाचां भयं तत्र निवेदयेत् ।
बुभुक्षां कथयामास आहारं चैव योजयेत् ॥
सदाहं सर्वकायाता ग्रामस्थानेषु दृश्यते ।
तदा ते कथयन्त्येते तां वाचां भयभैरवाम् ॥
षण्मासां नश्यते देशे ग्राम्यक्तां भोजनोत्तमाम् ।
तेषां क्षीरसमं देयं तोयं चैव सुखोदयम् ॥
शारिकाशुकमुख्यांस्तु कपोता हरितास्तथा ।
चक्रवाका भासस्वकीका सर्वे आगत्य मीलये ॥

ग्राममध्यगता ह्येते यदा कुर्वन्ति मालयम्।
तदा ते कथयन्त्येवं महादुर्भिक्षकारणम्॥

अनावृष्टिं तथा व्याधिं बहुरोगसमागमम्।
लूता विस्फोटकाश्चैव महातस्करताश्रयाम्॥

अवगच्छन्तु भवन्तो वै षड्भिर्मासैर्भविष्यते।
यदा सर्वपक्षिगणा क्रूरं चक्रतुर्भृशदारुणम्॥

रोदमाने तदा सर्वे सत्त्वानां च निवेदिता।
यथास्थिता यथाकालं तदैवत्तत्र योजयेत्॥

दकारबहुलं वाचं मनुष्यभाषिणो यदा।
आगत्य ग्रामवासेऽस्मिं कथयन्ति यथा हि तम्॥

रात्रौ स्वस्त्ययनं कृत्वा तस्माद् देशादपक्रमेत्।
मधुराक्षरसंयुक्तं यदा नेदु सपक्षिजा॥

तस्मात् सुभिक्षमारोग्यमेवं चाहुर्निवेदयेत्।
यदा दक्षिणतो गच्छे मृगा गच्छेथ मग्रतम्॥

सिद्धिं च निर्दिशन्ते ताः मृगाश्चैव सुपुष्कलाम्।
श्वानजम्बूकानित्यस्थाः ते मृत्युं दर्शयन्ति ते॥

न गच्छेत् तत्र मेधावी जम्बूकैश्च निवारितः।
प्रविशेत् स्वालयं क्षिप्रं कथयामास ते तदा॥

अतिक्रूरा निनेदुस्ताः अग्रतश्चापि प्रधावयेत्।
गच्छेत तत्क्षणान्मन्त्री यदिच्छेत् सिद्धिमात्मनः॥

वामतो दक्षिणं गच्छेज्जम्बूको यदि गच्छतः।
सिद्धियात्रं विजानीयाज्जम्बूकेन निवेदिताम्॥

चाषा च पक्षिणा सर्वे मृगाश्चैव सजम्बुका।
हरिणा शशकाश्चैव विविधा तिर्यजातयाः॥

प्रदक्षिणं च यदा चक्रुर्महासिद्धिं सुपुष्कलाम्।
कथयामास ते सर्वे गच्छ पूज्यो भविष्यसि॥

सर्वमशोभना ह्येते उरगा श्वापदादयो ।
मार्गे यदि दृश्यते स्थानगच्छेत् कुत्र वा क्वचित् ॥

सर्वे ते कथयन्त्येवं नास्ति सिद्धिनिवर्तताम् ।
गच्छतां स्वकमावासं स्वस्थो तिष्ठति स्वे गृहे ॥

न गच्छेत् तत्र मन्त्रज्ञो उरगैस्तु निवेदितम् ।
यदि गच्छेत् तदा कालं उद्वेगो मृत्यु वा भवेत् ॥

नानातिर्यगता प्राणा जलावासा स्थलेचरा ।
स्थावरा जङ्गमाश्चैव कथयन्ति शुभाशुभम् ॥

विपरीतैर्भयं विद्यात् स्वस्थैः स्वस्थतां गताः ।
केचित् तिर्यगताः दिव्याः मानुषा भाषिणो तदा ॥

योऽयं निवेदये वाचां तं तथैव नियोजयेत् ।
स्वलिङ्गैः सदा स्वास्थ्यं क्रूरैश्चापि सुभैरवम् ॥

तत् तथैवावधारणार्थं बुद्धिं दद्याथ मन्त्रवित् ।
लिङ्गावनेकधां लक्ष्ये नानायोनिसमाश्रिताम् ॥

मानुषाणां तथा वाचा युक्ता मध्यार्थभाषिणौ ।
मध्यदेशे तु या वाचा शब्दपदार्थावभाषिता ॥

स मानुषी वाचमित्याहुः ततोऽन्यं म्लेच्छवाचिनी ।
वाणी सर्वततो ज्ञेया मध्यदेशे निबोधिता ॥

मधुराक्षरसंयुक्ता हृद्या कर्णसुखावहा ।
अनेला मानसोद्भूता अविक्षिप्तार्थभाषिणी ॥

स ज्ञेया मानुषी वाचा रुतं चैव स्वभावतः ।
ततोऽन्ये सर्वतोऽनर्था सा वाचा म्लेच्छवर्णिनी ॥

कथितं मानुषं वान्यं पशूनां तावदिहोच्यते ।
सिंहोऽपि देशमाक्रम्य गच्छेत् पुरवरं सदा ॥

भृशं तत्र हरेत् क्षिप्रं तरुं तस्य सुदारुणम् ।
रुद्यते पशुराजा वै करुणं दीन निवेदयेत् ॥

महद् भयं तदा विद्यात् सर्वदेशोपसंप्लवम् ।
महापुरे यदा रावं पशुराज्ञेति श्रूयते ॥
पश्चिमे महद् भयं विन्द्याद् दक्षिणे शान्तिकामताम् ।
पूर्वेण तु भवेच्चक्र पराराष्ट्रागमं विदुः ॥
उत्तरेण भवेद् घोरा अग्निवृष्ट्याहु संप्लवम् ।
विदिक्षेष्वेव सर्वत्र भयं चैवं निवेदयेत् ॥
रावैर्द्विस्त्रिभिर्ज्ञेयं त्रिभिर्दिक्षु महद् भयम् ।
क्षेमदक्षिणतो सर्वं सिंहेनैव निवेदितम् ॥
चत्वारो मथ पञ्चा वा सप्त षष्ठ निंबोधिता ।
अष्टात् परेणमित्याहुः निःफलं चैव नियोजयेत् ॥
दक्षिणावस्थिता श्रेया अथ ऊर्ध्वार्त्थसम्पदा ।
क्षेमं + कसामीप्ये देवायतनचत्वरे ॥
सदारावं तदा वर्ज्यं तस्माद् देशादपक्रमेत् ।
यथा सिंहे तथा सर्वं सर्वप्राणिषु योजयेत् ॥
शरभैः शार्दूलाख्यैर्वै यथा तत् सर्वं निबोधताम् ।
अभावा मानुषावासं हिंसः शरभया सदा ॥
किन्तु प्रासादिकं ज्ञानं कत्थ्यते तां सुरोत्तमाम् ।
क्रोष्टुकेषु च सर्वत्र तां तथैव नियोजयेत् ॥
पूर्वपाश्चिमतो भागे यदा हस्ती रुदेद् भृशम् ।
तस्मान्महद् भयं विन्द्यात् तत्र देशेषु जन्तुनाम् ॥
श्मशाना वायसाश्चैव उर्ध्वतुण्डा रुदन्ति वै ।
तत्र विन्द्यान्महोद्वेगं वायसैश्च निवेदितम् ॥
प्रस्थितो मन्त्रिणे कालं यद्यदेशाभिकांक्षिणम् ।
गच्छतो वामतः काको भृशं रौति सुदारुणम् ॥
न गच्छेत् तत्र मेधावी वायसेन निवेदितम् ।
रौति दक्षिणतो श्रेयं अग्रतस्तु निवारयेत् ॥
न गच्छेत् तत्र मन्त्रज्ञो गच्छन् मृत्युवशो भवेत् ।
गोमयं भक्षयेत् पक्षी यदा रौति सुखोदयम् ॥

मृष्टान्नभोजनं विन्द्या गोलाभं चैव निर्दिशेत् ।
मन्दिरारूढनित्यस्थो यदा रौति स वायसः ।
अर्धरात्रे तथा काले गृहभेदं समादिशेत् ।
धान्यपुञ्जधरारूढो यदा रौति स वायसः ॥
सुशुभं कूजते क्षिप्रं मधुरं चापि भाषितम् ।
अचिरात् तं फलं विन्द्या बहुधान्यधनागमम् ॥
गृहद्वारं यदा पश्यं वायसो रवतो भृशम् ।
तत्र रात्रौ भवेत् तस्य शस्त्रसम्पात चौरिभिः ॥
क्षीरवृक्षे यदा श्रेष्ठों कण्टके कलहप्रियः ।
हस्तिस्कन्धसमारूढं अश्वपृष्ठे च शोभनम् ॥
भोगिनां मस्तके राज्यं पद्मपुष्पेषु सम्पदा ।
नानाविविधसम्पत्यो मधुराक्षरकूजिता ॥
सर्वतोलिङ्गमत्थानां तत् पूर्वं कथितं हितम् ।
+++कूजनं क्रूरं समं सर्वेषु योजयेत् ॥
शिवाय सर्वतो ज्ञेया दक्षिणेन फलप्रदा ।
तत् सर्वं सिंहतो ज्ञेयं शिवासु सर्वदा ॥
क्रूरा अशोभनारावा दीना मृत्युपरायणा ।
सर्वतो सुखनिष्पत्ति फलं सस्यसमुद्भवम् ॥
सर्वे शिवगणा प्रोक्ता शायम्प्राते च शोभना ।
एकारवेति यद्येता दक्षिणां दिशमाश्रिता ॥
शिवा शिवतमा प्रोक्ता द्वितीया रावे तु कीर्त्यते ।
तृतीये रावे तथा ज्ञेया राज्ञे अर्त्थावहा भवेत् ॥
चतुर्त्थे तु महालाभं पञ्चमे पुत्रदा स्मृता ।
षष्ठे च धननिष्पत्तिः सप्तमे न भवे शुभा ॥
अष्टमं निःफलं विन्द्या तदूर्ध्वं भयपीडिता ।
एवं करोति शिवा तत्र असङ्ख्येया तेऽप्यनिष्टदा ॥
पश्चिमेन शिवा ज्ञेया परचक्रभयं तदा ।
द्वितीये दुर्भिक्षकान्तारे क्रूररावा यदा भवेत् ॥

तृतीये अर्थनाशं तु चतुर्थे प्राणरोधिनम् ।
पञ्चमे कथिते रावे अमात्यानां व्याधिपीडकाः ॥

षष्ठे चोरागमं विन्द्या सर्वतस्तु शिवा तु सा ।
सप्तमेन महाव्याधिं अष्टमे चापि निन्दिता ॥

तदूर्ध्वं भयभीतार्त्ता क्षुधिता वा प्रभाषते ।
उत्तरेण तु यो रावो शिवायाः श्रूयते सदा ॥

महाघोरतमं व्याधिं तत्र स्थाने विनिर्दिशेत् ।
द्वितीये क्रूररावे तु दुःखदा सा भवेत् तदा ॥

तृतीये अर्थनाशं तु चतुर्थे अग्निसम्भवम् ।
पञ्चमेन महावृष्टिं षष्ठे राजापरुद्ध्यते ॥

सप्तमेन महायुद्धं शस्त्रसम्पातमादिशेत् ।
अष्टमे निःफलं विन्द्या तदूर्ध्वं यः किञ्चि रोदिति ॥

पूर्वेण च यदा रौति शिवा यामे तु सन्तिमे ।
तदा राजागमं विन्द्या द्वितीयारावे तु प्रेषिणाम् ॥

तृतीयं राजतो मृत्युः बद्धो वा यदि श्रूयते ।
चतुर्थे चोरतो दुःखं पञ्चमे प्राणरोधिकम् ॥

षष्ठे च भवते व्याधिः सप्तमे अग्नितो भयम् ।
अष्टमे निःफलं विन्द्या शेषं पूर्ववत् सदा ॥

यदा दक्षिणपूर्वेण विदिशे व्याहरे शिवा ।
प्रथमेन भवेत् सौख्यं द्वितीये सर्वतो जनाम् ॥

तृतीये धननिःपत्तिश्चतुर्थे सस्यसम्पदा ।
पञ्चमे सुभिक्षानिर्दिष्टं षष्ठे क्षेमं समादिशे ॥

सप्तमे सर्वतो ज्ञेयमष्टमे निःफलं सदा ।
यदा दक्षिणभागेन पश्चिमामध्यतो सदा ॥

निर्दिशे च ध्रुवा ज्ञेया शिवा क्रूरतमा स्मृता ।
प्रथमेन भवेन्मृत्युः हन्यते ब्राह्मणा द्विके ॥

तृतीये क्षत्रियं हन्या चतुर्थे वैश्यमित्याहुः ।
पञ्चमे शूद्रयोनयः ॥
षष्ठे म्लेच्छिनां हन्ति सप्तमे तस्करा तदा ।
अष्टमे निःफलं विन्द्या अतिदुःखं क्रूरराविणाम् ॥
असङ्खयेयानां तु दृश्यते ।
उत्तरापश्चिमाभागे यदा तीव्रं विरौति सा ॥
अतिक्षिप्रं महाव्याधिः राज्ञे वा व्याधिमादिशेत् ।
द्वितीयेन हन्यते हस्ती राज्ञो मुख्यो गजोत्तमम् ॥
तृतीयेन भवेन्मृत्युः मादिष्टः तत्र वै ।
चतुर्थेन भवेन्मृत्युः मुख्यानां च धनेश्वराम् ॥
पञ्चमे धननाशं तु षष्ठे व्याधि सम्भवेत् ।
सप्तमेन भवे दुःखं सर्वतो च भयावहम् ॥
अष्टमे निःफलं विन्द्या पूर्वं वै सर्वतो तदा ।
उत्तरे पूर्वयोर्मध्ये विदिक्षु चैव लक्षयेत् ॥
अतिक्रूरा यदा क्षिप्रं शिवा व्याहरते तदा ।
उत्तरे पूर्वतो मध्ये विदिक्षुश्चैव लक्षयेत् ॥
अतिक्रूरा यदा क्षिप्रं शिवा व्याहरते तदा ।
मृत्युना हन्यते जन्तुः पौरमुख्यो धनेश्वरः ॥
द्वितीयेन हनेन्मन्त्री तृतीये गजमादिशे ।
चतुर्थे विविधयोन्यास्तु म्लेच्छतस्करजीविनः ॥
चतुर्थेन भवेद् व्याधिः सर्वेषां च तदा जने ।
पञ्चमे हन्यते पुत्रो अमात्यो वा नृपतेर्ध्रुवम् ॥
षष्ठे मृत्युमादिष्टा महादेव्या तु नराधिपे ।
सप्तमेन हनेद् राष्ट्रं मुक्तं चापि विनिर्दिशेत् ॥
अष्टमे निःफलं विन्द्या पूर्ववत् कथिता सदा ।
अतः ऊर्ध्वं तथा रात्रो शिवानां च भवे यदा ॥

अमानुषं तं विदुर्मर्त्यो महोपद्रवकारकम् ।
अपक्रम्य ततो गच्छे मन्त्रैर्वा रक्षमादिशेत् ॥

महाप्रभावैर्विख्यातैर्जिनाब्जकुलयोद्भवैः ।
होमकर्माणि कुर्वीत शान्तिं तत्र समादिशेत् ॥

एवम्प्रकारा ह्यनेकानि बहुंभाष्या पशुयोनयः ।
नानापक्षिगणांश्चापि रुतं चैव निबोधये ॥

बहुधा तिर्यगता केचिच्चापसुसूर्त्तिजा ।
केचिद् विकृतरूपास्तु रौद्रा सत्त्वविहेठका ॥

केचित् प्राणापरोधिका सत्त्वा हिण्ड्यन्तेऽथ महीतले
असृक्पानरता केचिद् अन्वाहिण्डन्ति मेदिनी ॥

केचिद् रुधिरगन्धेन भ्रमन्ते मेदिनीतलम् ।
विविधा मातरा ह्येते ग्रहमुख्यास्तु बालिशा ॥

कुमारकुमारिकारूपाः ग्रहाः प्रोक्ताः विविधा परा ।
भ्रमन्ते मेदिनीं कृत्स्नां क्षणमात्रेण सर्वतः ॥

सहस्रं योजनं केचिद् वायुवद् भ्रमतापराः ।
पशुवेषकृता केचिद् दृष्ट्या नष्टा च जन्तुषु ॥

विविधं करोति सर्वे ते सर्वत्र वसुधातले ।
मृतपूतकसत्त्वेषु सुप्त उपहते तथा ॥

गृह्णते मानुषां केचिद् बलिमाल्यार्थकारणात् ।
सर्वेषां मानुषां लोके क्रमन्ते केचिन्नभस्तलात् ॥

सर्वाकारविदो ज्ञेया बहुरूपा विकारिणः ।
शुभा अशुभरावाश्च ज्ञेया लिङ्गैस्तु सर्वतः ॥

शुभाशुभफलं सर्वं विकृतं सुकृतं तथा ।
आगमैर्बहुविधैर्ज्ञेया लोकतत्त्वार्थचिह्नितैः ॥

ऋषिभिर्जिनसुतैश्चैव खड्गिभिर्जिनवरैः सदा ।
श्रावकैर्महर्द्धिकैः सर्वं नानायोनिसमाश्रितम् ॥

HH

ग्रहैर्ग्रहवरैः ख्यातैः प्रकृष्टैर्लोकचिह्नितैः ।
ज्ञेयं शास्त्रतो तत्त्वं आगमाधिगमापि वा ॥

नानालिङ्गविधानेन गतियोनिविभावतः ।
ज्ञेयं शुभाशुभं सर्वं क्रूरैः सौम्यैश्च लिङ्गिभिः ॥

छत्रं शितं पताकं च मत्सं मांसं च सार्द्रयोः ।
उत्क्षिप्ता च मेदिनी पश्यन्त्र गोमयं तदा ॥

दधि पुष्पं फलं चैव स्त्रियं वाम्बरभूषिताम् ।
शुक्लवस्त्रं तथा ज्ञेयं द्विजं श्रेयार्थभाषिणम् ॥

वृषं गजं तथा ज्ञेयं अश्वं चामरभूषितम् ।
प्रदीपं भाजने न्यस्तं पूर्णधान्यफलोदयम् ॥

देवद्विजप्रतिमां वा पूज्यमाना सदा नृपैः ।
अभिषेकार्त्थयुक्तं वा नृपबिम्बाथ मन्त्रिणाम् ॥

शङ्खस्वनं भेरींश्च पटहं चापि सुदुन्दुभिम् ।
घण्टाशब्दं प्रहृष्टं च जयशब्दं प्रघोषितम् ॥

प्रानुष्योदीरितां वाचां जयसिद्धिफलप्रदम् ।
एता निमित्ता मावेद्य इष्टां चैव निवेदिताम् ॥

सर्वसम्पत्करं क्षेमं इष्टं चैव सुपूजितम् ।
सर्वां प्राप्नुयादर्त्थां सफलां मनसोद्भवाम् ॥

मन्त्रजापं ततो गच्छेत् सिद्ध्यर्त्थी सिद्धिमादिशेद् ।
सर्वेषां सर्वसत्त्वानां प्रस्थितानां तु निर्दिशेत् ॥

योऽयं देवताध्यक्ष इष्टो गोत्रजो परो ।
आध्येष्ट्यो भवेन्नित्यं तं लिङ्गी पश्यतो फलम् ॥

विविधाकारचिह्नास्तु देवाः प्रोक्तास्तु सर्वदा ।
तल्लिङ्गिना तथा प्रोक्ता विविधा वेषचिह्नयः ॥

यो यमिष्टतरं पश्येत् सो तस्यैव फलोदयम् ।
वाचां बहुविधां वक्त्रे यदा ते मानुषा भुवि ॥

कथयन्ति शुभां वाचां अन्योन्यालापमास्थताः ।
परेषां च यदा वक्त्रे विश्वस्ताश्च समन्ततः ॥

एवं च वाचिरे मुञ्चुः शुभं श्रेयं जपं सदा ।
क्षेममारोग्यसर्वं वै स्वस्तिशान्तिसुखोदयः ॥

धनिनः देवतो मुख्य सुरो धर्मराजास्तथा ।
सर्वतो भास्करश्चैव छत्रध्वजपताकयोः ॥

बुद्धधर्मतदा सङ्घं मन्त्रं तारमितिः सदा ।
कुमारं काञ्चनं शुभ्रं अग्निस्कन्धं महोत्सवम् ॥

जिनं पद्म तथा वज्रं लोकेशं बोधिमुत्तमम् ।
बोधिसत्त्वा तथा लोकां ब्रह्मश्चैव सुरोत्तमाम् ॥

बहुप्रकारा ह्यनेकानि प्रशस्तां साधुवर्णिताम् ।
शुश्राव शब्दां यथा गन्ता सर्वासां प्राप्नुया हि सौ ॥

ततोऽन्ये लोकविद्विष्टं स शब्दं चापि निन्दितम् ।
प्रशस्ता शकुनयो ह्येता प्रस्थितानां जपे रताम् ॥

सर्वेषां च मयं योगो उद्योगात्र्थससम्पदाम् ।
ततोऽन्य निन्दितं सर्वं न लेभे कायितं फलम् ॥

प्रशस्तैव सर्वतो गच्छे अप्रशस्तैश्च न व्रजेत् ।
प्रणम्य सर्वतो बुद्धांस्त्रयं कृत्वा प्रदक्षिणम् ॥

स्वमन्त्रं मन्त्रनाथं च मातापित्रौ थ दुःकराम् ।
प्रणम्य सर्वतो गच्छे शिवं तत्र विनिर्दिशेत् ॥

आचार्यगुरुमुख्यानामुपाध्यायं चैव यत्नतः ।
प्रशस्तधार्मकाथिक प्रशस्तं चैव व्रते रतम् ॥

यथार्हं तदाभ्यर्च्य इष्टदेवमनोहितम् ।
स्नातशुक्तोऽथ विश्वस्तः प्रत्यूषे वा जितेन्द्रियः ॥

शौचाचाररतो मन्त्री गच्छेत् सर्वतो दिशाम् ।
यथाशाफलसंयोगं प्राप्नुयात् सर्वतो शुभाम् ॥

शान्तिस्वस्त्ययनं चैव आयुरारोग्यवर्द्धनम् ।
श्रीसम्पत् कथितामग्र्या यथेष्टं मनसेप्सितम् ॥

इति महायानवैपुल्यसूत्राद् बोधिसत्त्वपिटकावतंसका-
दार्यमञ्जुश्रीमूलकल्पाद् विंशतिमः सर्व-
भूतरुतज्ञाननिमित्तशकुननिर्देश-
परिवर्तपटलविसरः परि-
समाप्तमिति ॥

---

शुभं भूयात् ।

---

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna (Second Edition). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita. | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Varya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I. 1st & 2nd Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvyā) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I. 1st & 2nd Sargas). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II. 3rd Kânda). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa). | 0 | 12 | 0 |
| No 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II. 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana. | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III. 6th, 7th & 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I. 1st Kânda). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Srî Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pada. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshîraswamin and Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part II, 2nd Kanda 1—6 Vargas). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya). | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânânda Sarasvatî. (Part I.) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II.) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankara) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part III. 2nd Kanda 7—10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part IV. 3rd Kanda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatîndra | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् (Kavya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Saraswatî (Part III.) | 2 | 0 | 0 |
| No. 59—नागानन्दम् (Nâtaka) by Srîharshadeva with the commentary Nâgânandavimarsinî of Sivarâma. | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः (Stuti) by Srî Laghubhattâraka with the commentary of Srî Raghavânanda. | 0 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 61—सिद्धान्तसिद्धाञ्जनम् (Vedanta) by Sri Krishnananda Sarasvati (Part IV.) | 1 | 8 | 0 |
| No. 62—सर्वमतसंग्रहः (Sarvamatasangraha). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् (Kavya) by Bharavi with the commentary Sabdarthadipika of Chitrabhanu (1, 2 and 3 Sargas) | 2 | 8 | 0 |
| No. 64—मेघसन्देशः (Kavya) by Kalidasa with the commentary Pradipa of Dakshinavartanatha. | 1 | 0 | 0 |
| No. 65—मयमतम् (Silpa) by Mayamuni | 3 | 8 | 0 |
| No. 66—महार्थमञ्जरी (Darsana) with the commentary Parimala of Maheswarânanda. | 2 | 8 | 0 |
| No. 67—तन्त्रसमुच्चयः (Tantra) by Narayana with the commentary Vimarsini of Sankara (Part I. 1-6 Patalas) | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः (Agama) by Sri Bhojadeva with the Commentary Tâtparyadîpika of Sri Kumara. | 2 | 0 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः (Tantra) by Isanasivagurudevamisra (Part I Samanyapada). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः (Part I). | 2 | 8 | 0 |

*Apply to:—*

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*

## IN THE PRESS.

1. Tantrasamuchchaya (Tantra) of Nârâyana with commentary by Sankara (Part II.)
2. Îsânasivagurudevapaddhati (Tantra) by Îsânasivagurudevamisra. (Part II.)
3. Silparatna (Silpa).
4. Yâjnavalkyasmriti with the commentary Bâlakrida, of Visvarûpâchârya.

## Undertaken for Publication.

1. Arthasâstra of Kautilya.
2. Âsvalâyanagrihya with the commentary Anâvilâ of Haradatta.
3. Do. Devasvâmin's Bhâshya.
3. Pramânalakshana (Mîmâmsa) by Sarvajnâtmapâda.
5. Sarasvatikanthâbharana (Vyâkarana) of Bhoja with the Vritti of Nârâyana.
6. Vishnusamhitâ (Âgama).
7. Uttaragârgya (Âgama).
8. Kâvyaprakâsa (Alankâra) with the commentary Sampradayaprakâsini of Sri Vidyâchakravartin.